जरां च मृत्युं च नियान्ति संततम् ॥ १९ ॥ भवाभवत्वं तु न चेदवस्थितिर्न चास्य चान्यस्थितिजन्म नान्यथा । सतो ह्यसत्त्वादसतश्च सत्वतो न च क्रियाकारकमित्यतोऽप्यजम् ॥ २० ॥ अकुर्वदिष्टं यदि वास्य कारकं न किंचिदन्यन्ननु नास्त्यकारकम् । सतो विशेषादसतश्च सच्युतौ तुलां तयोर्यद्वदनिश्चयान्न हि ॥ २१ ॥ न चेत्स इष्टः सदसद्विपर्ययः कथं भवः स्यात्सदसद्व्यवस्थितौ । विभक्तमेतद्द्वयमप्यवस्थितं न जन्म तस्माच्च मनो हि कस्यचित् ॥ २२ ॥ अथाभ्युपेत्यापि भवं तवेच्छतो ब्रवीमि नार्थस्तव चेष्टितेन मे । न हानवृद्धी न यतः स्वतोऽसतो भवोऽन्यतो वा यदि वास्तिता तयोः ॥ २३ ॥ ध्रुवा ह्यनित्याश्च न चान्ययोगिनो मिथश्च कार्यं न च तेषु युज्यते । अतो न कस्यापि हि किंचिदिष्यते स्वयं च तत्त्वं न निरुक्तिगोचरम् ॥ २४ ॥ समं तु तस्मात्सततं विभातवद्द्वयाद्विमुक्तं सदसद्विकल्पितात् । निरीक्ष्य युक्त्या श्रुतितस्तु बुद्धिमानशेषनिर्वाणमुपैति दीपवत् ॥ २५ ॥ अवेद्यमेकं यदनन्यवेदिनां कुतार्किकाणां च सुवेद्यमन्यथा । निरीक्ष्य चेत्थं त्वगुणग्रहोऽगुणं न याति मोहं ग्रहदोषमुक्तितः ॥ २६ ॥ अतोऽन्यथा न ग्रहनाश इष्यते विमोहबुद्धेर्ग्रह एव कारणम् । ग्रहोऽप्यहेतुस्त्वनलस्त्वनिन्धनो यथा प्रशान्तिं परमां तथा व्रजेत् ॥ २७ ॥ विमथ्य वेदोदधितः समुद्धृतं सुरैर्महाब्धेस्तु यथा महात्मभिः ॥ तथाऽमृतं ज्ञानमिदं हि यैः पुरा नमो गुरुभ्यः परमीक्षितं च यैः ॥ २८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पूज्यशिष्यस्य श्रीशंकरभगवतः कृतिः सकलवेदोपनिषत्सारोपदेशसाहस्री समाप्ता ॥

